## ।। श्री विष्णुधर्मोत्तरपुराणे दाल्भ्य-पुलस्त्य संवादे ।।

## ।। अथ अपामार्जन-स्तोत्रम् ।।

।।श्रीः।। दाल्भ्यः उवाच ।।

भगवन् प्राणिनः सर्वे विषरोगाद्युपद्रवैः । दुष्टग्रहोपघातैश्च सर्वकालमुपद्रुताः ।।१।। आभिचारिककृत्याभिः स्पर्शरोगैश्च दारुणैः । सदा संपीड्यमानास्ते तिष्ठंति मुनिसत्तम ।।२।। येन कर्मविपाकेन ग्रहरोगाद्युपद्रवाः । न भवन्ति नृणां तन्मे यथावद् वक्तुमर्हसि ।।३।।

पुलस्त्यः उवाच ।

जनार्दनं भूतपतिं जगद्गुरुं स्मरन् मनुष्यः सततं महामुने । दुष्टान्यशेषाण्यपहन्ति सद्यो निःशेषकार्याणि च साधु साधयेत् ।।४।। व्रतोपवासैर्यैर्विष्णुर्नान्यजन्मानि तोषितः । ते नरा मुनिशार्दूल ग्रहरोगादिभागिनः ।।५।। यैर्न तत्प्रवणं चित्तं सर्वदैव नरैः कृतम् । विषग्रहज्वराणां ते मनुष्या दाल्भ्य भागिनः ।।६।। आरोग्यं परमामृद्धिं मनसा यद्यदिच्छति । तत्त दाप्नोत्यसंदिग्धं परत्राच्युततोषकृत् ।।७।। नाधीन्प्राप्नोति न व्याधीन् न विषग्रहबन्धनम् । कृत्यास्पर्शभयं वापि तोषिते मधुसूदने ।।८।। सर्वदुष्टशमस्तस्य सौम्यास्तस्य सदा ग्रहाः । देवानामप्यधृष्योऽसौ तुष्टो यस्य जनार्दनः ।।९।। यः समः सर्वभूतेषु यथात्मनि तथा परे । उपवासादिना येन तोषितो मधुसूदनः ।।१०।। तोषिते तत्र जायन्ते नराः पूर्णमनोरथाः । अरोगाः सुखिनो भोगान् भोक्तारो मुनिसत्तम ।।११।। न तेषां शत्रवो नैव स्पर्शरोगाभिचारिकम् । ग्रहरोगादिकं वापि पापकार्यं न विद्यते ।।१२।। अव्याहतानि कृष्णस्य चक्रादीन्यायुधानि च । रक्षन्ति सकलापद्भ्यो येन विष्णुरुपासितः ।।१३।।

दाल्भ्यः उवाच ।

अनाराधितगोविन्दा ये नरा दुःखभागिनः । तेषां दुःखभिभूतानां यत्कर्तव्यं दयालुभिः ।।१४।। पश्यद्भिः सर्वभूतस्थं वासुदेवं महामुने । समदृष्ट्या हृषीकेशं तन्मे ब्रूह्यविशेषतः ।।१५।।

पुलस्त्यः उवाच ।

तद्वक्ष्यामि मुनिश्रेष्ठ समाहितमनाः शृणु । रोगदोषहरं नृणामुरुपापप्रणाशनम् ।।१६।। सौवर्णं राजतं ताम्रं मृन्मयं वा नवं दृढम् । अव्रणं कलशं शुद्धं स्थापयेत् तंडुलोपरि ।।१७।। तत्रोदकं समानीय शुद्धं निर्मलमेव च । एकं शतं कुथान्साग्रान् स्थापयेत् कलशोपरि ।।१८।। विरिंचिना सहोत्पन्न परमेष्ठी निसर्गज । नुद सर्वाणि पापानि दर्भ स्वस्तिकरो भव ।।१९।। कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः । कुशाग्रे शंकरं विद्यात् त्रयो देवाः कुशे स्थिताः ।।२०।। गृहीत्वा तु समूलाग्रान् कुशाञ्छुद्धानुपस्पृशेत् ।। मार्जयेत्सर्वगात्राणिकुशाग्रैर्दाल्भ्यशांतिकृत् ।।२१।। शरीरे यस्य तिष्ठन्ति कुशोत्था जलबिंदवः । नश्यन्ति तस्य पापानि गरुडेनेव पन्नागाः ।।२२।। विष्णुभक्तो विशेषण शुचिस्तद्गतमानसः । रोगग्रहविषार्तानां कुर्याच्छांतिमिमां शुभां ।।२३।। वराहं नारसिंहं च वामनं विष्णुमेव च । ध्यात्वा समाहितो भूत्वा दिक्षु नामानि विन्यसेत् ।।२४।। नारसिंहं समभ्यर्च्य शुचौ देशे कुशासने । दिग्रक्षां च ततः कुर्यात् विष्णुभक्तः समाहितः ।।२५।। मंत्रैरेतैर्यथालिंगं कुर्याद् दिग्बंधमादितः । पूर्वे नारायणः पातु वारिजाक्षस्तु दक्षिणे ।।२६।। प्रद्युम्नः पश्चिमे पातु वामदेवस्तथोत्तरे । ईशान्यां वामनश्चैव तथाग्नेय्यां जनार्दनः ।।२७।। नैर्ऋत्यां पद्मनाभश्च वायव्यां चैव माधवः । ऊर्ध्वं गोवर्धनो देवो

ह्यधरायां त्रिविक्रमः ।।२८।। एताभ्यो दशदिग्भ्यस्तु सर्वतः पातु केशवः । जले रक्षतु वाराहः स्थले रक्षतु वामनः ।।२९।। अटव्यां नारासिंहश्च सर्वतः पातु केशवः । एवं कृत्वा तु दिग्बन्धं विष्णुं सर्वत्र संस्मरेत् ।।३०।। अव्यग्रचित्तः कुर्वीत न्यासकर्म यथाविधी । अंगुष्ठाग्रे तु गोविन्दं तर्जन्यां तु महीधरम् ।।३१।। मध्यमायां हृषीकेशमनामिक्यां त्रिविक्रमम् । कनिष्ठिक्यां न्यसेद् विष्णुं करमध्ये तु माधवम् ।।३२।। हृन्मध्ये चिन्तयेद् दैवं परमात्मानमीश्वरम् । नृसिंहं मणिबन्धे च करपृष्ठे जनार्दनम् ।।३३।। कृते च वैष्णवे न्यासे सर्वपापैः प्रमुच्यते । एवं न्यासं करे कृत्वा पश्चादंगेषु विन्यसेत् ।।३४।। शिखायां केशवं न्यस्य, मूर्ध्नि नारायणं न्यसेत् । ललाटे माधवं न्यस्य गोविन्दं तु भ्रुवोर्न्यसेत् ।।३५।। चक्षुर्मध्ये न्यसेद्विष्णुं श्रवणे मधुसूदनम् । त्रिविक्रमं कपोले तु वामनं कर्णमूलयोः ।।३६।। नासारंध्रद्वये चैव श्रीधरं कल्पयेद् बुधः । उत्तरोष्ठे हृषीकेशं पद्मनाभं तथाऽधरे ।।३७।। दामोदरं दन्तपंक्तौ वाराहं चुबुके तथा । जिह्वायां वासुदेवं च तालौ तु गरुडध्वजम् ।।३८।। वैकुण्ठं कंठमध्ये तु ह्यनंतं नासिकोपरि । दक्षिणे तु भुजे विप्र विन्यसेत् पुरुषोत्तम् ।।३९।। वामे भुजे महाभागं राघवं हृदि विन्यसेत् । हरिं नाभौ तु विन्यस्य स्तनयोः पीतवाससम् ।।४०।। पीताम्बरं सर्वतनौ हरिं नाभ्यां तु विन्यसेत् । करे तु दक्षिणे विप्र ततःसंकर्षणंन्यसेत् ।।४१।। वामे रिपुहरं विद्यात् कटिमध्येऽ पराजितम् । पृष्ठे क्षितिधरं विद्यात् अच्युतं स्कंधयोर्द्वयोः ।।४२।। वक्षस्थले माधवं तु कुक्ष्योश्च योगशायिनम् । योगीशं दक्षिणेपार्श्वे वामपार्श्वे श्रियः पतिम् ।।४३।। आंत्रेषु वासुदेवं च गुदमध्येऽव्ययं न्यसेत् । स्वयंभुवं मेढ्रमध्ये

ह्यूर्वोश्चैव गदाधरम् ।।४४।। जानुमध्ये चक्रधरं जंघयोरच्युतं न्यसेत् । पादयोः पुष्कराक्षं च सर्वतो विश्वरूपिणम् ।।४५।। गुल्फयोर्नारसिंहं च पादपृष्ठेऽमितौजसम् । अंगुल्यां श्रीधरं न्यस्य पद्माक्षं सर्वसन्धिषु ।।४६।। नखेषु माधवं न्यस्य न्यसेत्पादतलेऽच्युतम् । रोमकूपे गुडाकेशं कृष्णं रक्तास्थिमज्जसु ।।४७।। मनोबुद्धिरहंकार चित्ते न्यस्य जनार्दनम् । आपादमस्तकं चैन प्रद्युम्नं कल्पयेद् बुधः ।।४८।। पूजाकाले तु देवस्य स्नानकाले तथैव च । होमारंभे च कर्तव्यं त्रिसंध्यासु च नित्यशः ।।४९।। एवं न्यासाविधिं कृत्वा स्वयं नारायणो भवेत् । तनुर्विष्णुमयी तस्य यावत् किंचिन्न भाषते ।।५०।। एवं न्यासाविधिं कृत्वा यत्कार्यं शृणुत द्विज । पादमूले तु देवस्य शंखं विन्यस्य निर्मलम् ।।५१।। वनमालां हृदि न्यस्य सर्वदेवाभिपूजिताम् । गदां वक्षस्थले न्यस्य चक्रं विन्यस्य पृष्ठतः ।।५२।। श्रीवत्सांकं न्यसेन् मुर्ध्नि पंचांगं कवचं न्यसेत् ।।५३।। ॐ नमो भगवते विष्णवे केशवाय सर्वक्लेशापहर्त्रे हृदयाय नमः । ॐ नमो भगवते विष्णवे केशवाय सर्वक्लेशापहर्त्रे शिरसे स्वाहा । (एवमेव) ॐ नमो भगवते विष्णवे केशवाय सर्वक्लेशापहर्त्रे शिखासै वषट् ॐ नमो भगवते विष्णवे केशवाय सर्वक्लेशापहर्त्रे कवयाच हुम् । ॐ नमो भगवते विष्णवे केशवाय सर्वक्लेशापहर्त्रे नेत्रत्रयाय वौषट् । ॐ नमो भगवते विष्णवे केशवाय सर्वक्लेशापहर्त्रे अस्त्राय फट् । इति दिग्बंधः ।। विष्णुरूर्ध्वमधः पातु वैकुंठो वै दिशो दश । पातु मां सर्वतो रामो धन्वी चक्री च केशवः ।।५४।। अपामार्जनको न्यासः सर्वव्याधिविनाशनः । आत्मनश्च परस्यापि विधिरेष उदाहृतः ।।५५।। वैष्णवेन तु कर्तव्यः सर्वसिद्धिप्रदायकः । जपप्रारंभकाले तु ह्यपामार्जनकं परम् ।।५६।। ततो जपेदिदं दाल्भ्य सर्वरोग-

विनाशनम् । आयुरारोग्यमैश्वर्य ज्ञानविद्वत्फलं लभेत् ।।५७।। यद्यच्छुभकरं लोके तत्सर्वं प्राप्नुयान्नरः । अभयं सर्वभूतेभ्यो विष्णुलोकं स गच्छति ।।५८।। अस्य श्री अपामार्जन-स्तोत्र-मंत्रास्य पुलस्त्यो भगवान् ऋषिः । अनुष्टुप् त्रिष्टुप् बृहत्यश्छंदांसि । श्रीवराहो नृसिंहो वामनो विष्णुर्देवता । हर अमुकस्य मम वा दुरितम् इति बीजम् ।। अच्युतानंतगोविंदेति शक्तिः । तप्तहाटककेशांतेति कीलकम् । ज्वलत्पावकलोचनेति कवचम् । वज्रायुध-नखस्पर्शेति व्यापकम् । हां हां हुं हुं फट् इत्यस्त्रम् । मम अमुकस्य वा ज्वर-सन्निपातादि-पीडाशमनार्थम् अपामार्जन-स्तोत्र-जपे विनियोगः ।

अथ ध्यानम् ।।

नीलोत्पलदलश्यामं पीताम्बरधरं हरिम् । शंखचक्रगदापाणिं ध्यात्वा चापामार्जनं जपेत् ।।५९।। बृहत्तनुं बृहद्गात्रं बृहद्दंष्ट्रं सुशोभनम् । समस्तवेदवेदांग-युक्तांगैर्भूषणैर्युतम् ।।६०।। उद्धृत्य भूमिं पातालाद् हस्ताभ्यामुपगृह्य च । आलिङ्ग्य भूमिं शिरसा मूर्ध्नि जिघ्रन्तमच्युतम् ।।६१।। रत्नवैडूर्यमुक्ताभिर्भूषणैरुपशोभितम् । पीताम्बरधरं देवं शुक्लमाल्यानुलेपनम् ।।६२।। त्रयस्त्रिंश त्कोटिदेवैः स्तूयमानं मुदान्वितम् । ऋषिभिः सनकाद्यैश्च स्तूयमानं दिवानिशम् ।।६३।। नृत्यद्भिरप्सरोभिश्च गीयमानं च किन्नरैः । इत्थं ध्यात्वा तथात्मानं जपेन्नित्यमतंन्द्रितः ।।६४।। सुवर्णमंडपान्तस्थं पद्मं ध्यायेत्स-केसरम् । सकर्णिकैर्दलैश्चैव ह्यष्टाभिः परिशोभितम् ।।६५।। कलंकरहितं देवं पूर्णचन्द्रार्बुद-प्रभम् । तडित्समानशोभावत्कंठना-लेन शोभितम् ।।६६।। श्रीवत्सांकितवक्षस्थं तीक्ष्णदंष्ट्रं सुलोचनम् । जपाकुसुमसंकाशं

रक्त हस्ततलान्वितम् ।।६७।। पद्मासनसमारुढं योगपद्म-समान्वितम् । पीतवस्त्र परीधानं शुक्लवस्त्रोत्तरीयकम् ।।६८।। कटिसूत्रेण हैमेन नूपुरेण विरानितम । वनमालादिशोभाढ्यं मुक्ताहारोपशोभितम् ।।६९।। सपंकजं चतुर्हस्तं तत्पत्रायतलोचनम् । प्रातः सूर्यसमाभ्यां वौ कुंडलाभ्यां विराजितम् ।।७०।। अनेकसूर्यसंकाशं मुकुटाटोप-मस्तकम् । शंखचक्र-गृहीताभ्यामुद्-बाहुभ्यामथान्वयोः ।।७१।। केयूर-कांतिसंस्पर्धि मुद्रिकारत्न-शोभितम् । जानू परिन्यस्तकरद्वन्द्वं रत्ननखांकितम् ।।७२।। जंघाभरणसंस्पर्धि विस्फूर्ज त्कंकण-त्विषम् । चतुर्थी-चंद्रसंकाशं सुदंष्ट्र-मुखपंकजम् ।।७३।। मुक्ताफलाभसुमहद्-दंतावलि-विराजितम् । चंपकाकुसुमाभं च सुनासां मुखपंकजम् ।।७४।। अतिरक्तोष्ठवदनं व्यात्तास्यमति-भीषणम् । वामांकस्थाश्रिया युक्तं शांतिदां तुंगरोहिणीम् ।।७५।। अर्हणीं चक्रपादां च सुनासां शुभलक्षणाम् । सुभ्रूं सुकेशीं सुश्रोणीं सुभुजां द्विभुजाननाम् ।।७६।। सुप्रतिष्ठां शुभ्रदन्तीं चतुर्हस्तां विंचितयेत् । दुकूलां चैव चार्वंगी हरिणीं सर्वकामदाम् ।।७७।। तप्तकांचनसंकाशां सर्वाभरणभूषिताम् । सुवर्णकलश-प्रख्य-पीनोन्नतपयोधराम् ।।७८।। गृहीतमातुलिंगाभ्या-मुद्बाहुभ्यामथान्ययोः । गृहीतपद्म-युगुल-जांबू-नदकरान्विताम् ।।७९।। एवं देवी नृसिंहस्य नामांकोपरि संस्मरेत् । देवं च कर्णिकामध्ये काम्ये नित्ये च कर्मणि ।।८०।। आत्मानं च नृसिंहस्य शरीरं संस्मरेदपि । हेमाद्रि-शिखराकारं शुद्ध-स्फटिकसन्निभम् ।।८१।। पूर्णचन्द्रनिभं देवं द्विभुजं वामनं स्मरेत् । सूर्यकोटिप्रतीकाशं चन्द्रकोटिसुशीतलम् ।।८२।। ज्वलत्कालानल-प्रख्यं तडित्कोटिसमप्रभम् । सुंदरं पुंडरीकाक्षं किरीटेन विराजितम् ।।८३।। षोडशस्त्रीसहस्त्रैश्च गंधर्वाप्सरसां

गणैः । चतुर्मुखाद्यैर्देवेशैः स्तोत्रारा धन तोषितैः ।।८४।। त्र्यम्बको वै महादेवो नृत्यते सन्निधौ हेरेः ।।८५।। अजिनदंड-कमंडलुमेखला रुचिर-पावन-वामन-मूर्तये मित-जगत् त्रितयाय जितारये निगमवाक्पटवे बटवे नमः ।।८६।। शान्तं पद्मासनस्थं सकलशशिनिभं श्रीपतिं कोमलांगम् । हस्ते पीयूषवुंभं दधियुत-कवलं हस्तपद्मो दधानम् । पीतं वस्त्रं दधानं कटकमुकुटयोर्हारकेयूरमालाम् । नानालंकारयुक्तं स्फटिकमणिनिभं वामनं नौमि नित्यम् ।।८७।। अभ्रश्यामः शुभ्रयज्ञोपवीती यत्कौपीनः पीत-कृष्णाजिनश्रीः । छत्री दंडी पुंडरीकायताक्षः पायाद् देवो वामनो ब्रह्मचारी ।।८८।। अति-सुविमलगात्रं रुक्मपात्रस्थमन्नं सुललितदधिखंडं पाणिना दक्षिणेन । कलशममृतपूर्णं वामहस्ते दधानं तरति सकल-दुःखं वामनं भावयेद्यः ।।८९।। क्षीरसागर-कल्लोल-सितरक्ततनुं शुभम् । मणिमुक्तामये रम्ये सकान्तं संस्थितं शुभम् ।।९०।। शुभ्रमेघविनिर्मुक्तं सुधासिक्तं सुसुन्दरम् । एक-नामानमात्मानं कृत्वाऽपामार्जनं जपेत् ।।९१।। ॐ नमः परमार्थाय पुरुषाय महात्मने । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ।।९२।। अरूप-बहुरूपाय व्यापिने परमात्मने । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ।।९३।। निष्कल्मषाय शुद्धाय ध्यातृपाप हराय च । नमस्कृत्वा प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः ।।९४।। नारायणाय देवाय विश्वेशायेश्वराय च । नमस्कृत्वा प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः ।।९५।। सच्चिदानंदरूपाय योगिने परमात्मने । नमस्कृत्वा प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः ।।९६।। वराहाय नृसिंहाय वामनाय महात्मने । नमस्कृत्वा प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः ।।९७।। गोविन्दपद्मनाभाय वासुदेवाय विष्णवे । नमस्कृत्वा प्रवक्ष्यामि यत्तत् सिध्यतु मे

वचः ।।९८।। दामोदराय देवाय अनंताय महात्मने । नमस्कृत्वा प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः ।।९९।। जनार्दनाय कृष्णाय उपेंद्रश्रीधराय च । नमस्कृत्वा प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः ।।१००।। त्रिविक्रमाय रामाय वैकुंठाय नराय च । नमस्कृत्वा प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः ।।१०१।। हिरण्यगर्भपतये हिरण्यकशिपुच्छिदे । नमस्कृत्वा प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः ।।१०२।। भक्तप्रियाय विभवे विष्वक्सेनाय शार्ङ्गिणे । नमस्कृत्वा प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः ।।१०३।। चक्रहस्ताय शूराय ताक्ष्र्यपत्राय धीमते । नमस्कृत्वा प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः ।।१०४।। अधोक्षजाय दक्षाय मत्स्याय मधुसूदिने । नमस्कृत्वा प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः ।।१०५।। दैत्यारय उपेंद्राय भूतानां जीवनाय च । नमस्कृत्वा प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः ।।१०६।। विष्टरश्रवसे तस्मै क्षीरांभोनिधि-शामिने । नमस्कृत्वा प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः ।।१०७।। नारसिंह, महोग्रेश तस्मै तुभ्यं नमो नमः । वराहेश नृसिंहेश वामनेश त्रिविक्रम ।।१०८।। हयग्रीवेश सर्वेश हृषीकेश हराऽ-शुभम् । अपराजितचक्राद्यैश्चतुर्भिः परमायुधैः ।।१०९।। अखंडितानुभावैश्च सर्वदुःखहरो भव । हरामुकस्य दुरितं दुष्कृतं दुरुपासितम् ।।११०।। मृत्युबाधार्तिभयदं दुरिष्ट च यत्फलम् । परापध्यान-संस्थान प्रयुक्तं चाभिचारिकम् ।।१११।। गरस्पर्शमहारोगप्रयुक्तं जरयत्वरम् । कृष्णाय वासुदेवाय हरये परमात्मने ।।११२।। प्रणतक्लेशनाशाय गोविंदाय नमो नमः । हरये वासुदेवाय नमः कृष्णाय शार्ङ्गिणे ।।११३।। नमः पुष्करनेत्राय केशवायादिचक्रिणे । नमः कमलकिंजल्क-पीतनिर्मलवाससे ।।११४।। महाहवरिपुस्कंध-धृष्टरूपाय चक्रिणे

। दंष्ट्रोद्धृतक्षिति-धृते त्रिमूर्तिपतये नमः ।।११५।। महायज्ञवराहाय शेषभोगोरु-शायिने । तप्तहाटक-केशांत ज्वलत्पावकलोचन ।।११६।। वज्रायुधनख-स्पर्श दिव्यसिंह नमोऽस्तु ते । आधिव्याधि-महाभीति-महादुःख निवारण ।।११७।। अपार नरसिंहेश दिव्यसिंह नमोऽस्तु ते । श्रीनृसिंहो दिव्यसिंहः सर्वारिष्टार्ति दुःखहा ।।११८।। एकवीरोद्भुत-बलो मंत्रयंत्रैक-भंजनः । सर्वत्र रक्ष मां नाथ भयेभ्यधाग्नि लोचन ।।११९।। प्रसादात्तव देवेश ना मां हिंसन्तु हिंसकाः । तीक्ष्णैर्नखाग्रैर्यमुरो विदार्य त्रात्वा सुरान्दैत्य-पतिं जघान । सुदर्शनं पद्मगदां च शंखं बिभ्रन्नृसिंहोऽस्तु ममाऽभयाय ।।१२०।। काश्यपायातिहृस्वाय ऋग्यजुः सामरूपिणे । तुभ्यं वामनरूपाय क्रमते गां नमो नमः ।।१२१।। वराहा-शेषदुष्टानि सर्वपापफलानि वै । मर्द मर्द महादंष्ट्र मर्द मर्द महीधर ।।१२२।। नारसिंहकरालास्य दंतप्रांत-नखोज्ज्वल । भंज भंज निनादेन दुष्टान्यस्यार्तिनाशन ।।१२३।। ऋग्यजुः सामगर्भाभिर्वाग्भिर्वामन-रूपधृक् । प्रशमं सर्व-दुःखानि नयत्वाशु जनार्दन ।।१२४।। अस्य श्रीज्वरमंत्रस्य । कालाग्नि-ऋर्षिः । अनुष्टुप् छंदः । महादेवो देवता । सकल-ज्वरोपमशांत्यर्थे जपे विनियोगः । भस्मायुधाय विद्महे एकदंष्ट्राय धीमहि । तन्नो ज्वरः प्रचोदयात् । त्रिपाद्भस्म-प्रहरणस्त्रिशरीर रक्त-लोचनः । स मे प्रीतः सुखं दद्यात्सर्वामयपतिर्ज्वरः ।।१२५।। आद्यंतवंतः कवयः पुराणाः सूक्ष्मा बृहंतोह्यनुशासितारः । सर्वान् ज्वरान् घ्नन्तु ममानिरुद्ध प्रद्युम्न संकर्षण वासुदेव ।।१२६।। कुबेर ते मुखं रौद्रं नंदिन्नानंदमावह । ज्वरमृत्युभयं घोरं विशनाशय मे ज्वरम् ।।१२७।। अंगवंग-कलिंगेषु सौराष्ट्र-मगधेषु च । वाराणस्यां च यद्दत्तं किं न स्मरसि रे ज्वर ।।१२८।। श्रीकंठक्रोधसंभूत

सुरासुर-नमस्कृत । नित्यंक्रतुरिपुः शीघ्रं सुखं वितर मे ज्वर ।।१२९।। एषां चतुर्णां मंत्राणामयुतो जय ईरितः । योऽसौ सरस्वतीतीरे ह्यपुत्रो ब्राह्मणो मृतः ।।१३०।। यवादि-कृतपद्मेषु समाह्वयामि पूज्य च । त्रिरात्र-ज्वरनाशाय ददाम्येतत्तिलोदकम् ।।१३१।। येषु मंत्रेषु याः प्रोक्ता देवतास्तास्तु तपर्येत् । ताम्रपात्रे तिलान्कृत्वा गंध-पुष्पाक्षतादिभिः ।।१३२।। शुद्धोदकेन शुद्धात्मा सहस्त्र परिसंख्यया । आवाह्य पूजयित्वा तु स्थंडिले चोपकल्पिते ।।१३३।। होमं चाथ प्रकुर्वीत क्षीराज्येनाम्रपल्लवैः । आद्यंतमन्त्यैः स्वाहान्तैर्दशमंत्रैश्च मंत्रवित् ।।१३४।। एवं कृते ज्वराः सर्वे प्रशमं यान्त्यशेषतः । न बाधन्ते पुनस्तानि दुष्टादीनां परिग्रहात् ।।१३५।। आयुरारोग्यमैश्वर्य ज्ञानं वित्तं फलं लभेत् । यद्यच्छुभतरं लोके तत्सर्व प्राप्नुयान्नरः ।।१३६।। ऐकाहिकं दव्याहिकं च तथा त्रिदिवसज्वरम् । चातुर्थिकं तथात्युग्रं तथैव सतत-ज्वरम् ।।१३७।। दोषोत्थं सन्निपातोत्थं तथैवागंतुकज्वरम् । शमं नयाशु गोविंद छिंधि छिंध्याशु वेदनाम् ।।१३८।। नेत्रदुःखं शिरोदुःखं दुःखं चोदर-संभवम् । अतिकासमतिश्वासमतितापं सवेपथुम् ।।१३९।। गुद-घ्राणांघ्रिरोगांश्च कुष्ठरोगं तथा क्षयम् । कामलादींस्तथा रोगान्प्रमेहांश्चाति- दारुणान् ।।१४०।। भगंदरातिसारांश्च मुखरोगांश्च वल्गुलीन् । चित्रादीन्नखरोगांश्च त्वगस्थंतर्बहिः स्थितान् ।।१४१।। अश्मरीं मूत्रकृच्छ्रांश्च रोगानन्यांश्च दारुणान् । ये वात तप्रभवा रोगा ये च पित्तसमुद्भवाः ।।१४२।। कफोद्भवाश्च ये रोगा ये वान्ये सान्निपातिकाः । आगंतुकाश्च ये रोगा लुनाविस्फोटकादयः ।।१४३।। ते सर्वे प्रशमं यान्तु वासुदेवापमार्जिताः । विलयं यान्तु ते सर्वे विष्णोरुच्चारणेन तु ।।१४४।। क्षयं गच्छन्त्वशेषास्ते

चक्रेणाभिहता हरेः । अच्युतानंतगोविंद नामोच्चारण-भेषजात्
।।१४५।। नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ।।१४६।।
अच्युतेति मनः पूतमनंतेति वचस्तथा । गोविंदेति तनुः पूतात्वज्ञाताज्ञानपातकैः
।।१४७।। अच्युतानंत गोविंद परमानंद माधव । ॐ नमः संपुटीकृत्य
जपन्नेवमधोक्षजम् ।।१४८।। सत्यं सत्यं पुनः सत्यंमुत्क्षिप्य भुजमुच्यते
। वेद-शास्त्रांत्परंनास्ति न देवः केशवात्परः ।।१४९।। स्थावरं
जंगमं वापि कृत्रिमं चापि यद्विषम् । दंतोद्भूतं नखोद्भूतमाकाशप्रभवं
विषम् ।।१५०।। लूतादि-प्रभवं यच्च विषमत्यंतदुःखदम् । शमं
नयाशु तत्सर्वं कीर्तितोऽसि जनार्दन ।।१५१।। ग्रहान्प्रेतग्रहांश्चैव
तथा वै डाकिनीग्रहान् । मुखमंडलिकान्घोरान् रेवतीं वृद्धरेवतीम्
।।१५२।। वृद्धाख्यांश्च ग्रहांश्चोग्रांस्तथा मातृग्रहानपि । बालस्य
विष्णोश्चरितं हन्तु बालग्रहानिमान् ।।१५३।। नारसिंहस्य ते दृष्ट्या
दग्धा ये चापि यौवने । सटा-कराल-वदनो नारसिंहो महाबलः
।।१५४।। ग्रहानशेषान् सर्वेषां खाद खादाग्निलोचन । वृद्धानां ये
ग्रहाः केचिद्येच बालग्रहाः क्वचित् ।।१५५।। नारसिंह महासिंह
ज्वालामालोज्ज्वलानन । अमीषां देवदेवेश धनुर्ग्रहण-मोक्षणात्
।।१५६।। ये रोगा ये महोत्पाता यद्विषं ये महाग्रहाः । अत्यंत-
पापसंभूता ये कौटिल्य-समुद्भवाः ।।१५७।। यानि च क्रूर-
भूतानि ग्रहपीडाश्च दारुणाः । शस्त्रक्षतेषु ये दोषा ज्वालागर्दभकादयः
।।१५८।। यानि चान्यानि भूतानि प्राणिपीडा-कराणि वै । तानि
सर्वाणि सर्वात्मन्परमात्मन् जनार्दन ।।१५९।। किंचिद्रूपं समास्थाय
वासुदेवाशु नाशय । क्षित्वा सुदर्शनं चक्रं ज्वालामालाति-भीषणम्
।।१६०।। सर्व दुःखोपशमनं कुरुदेव वराच्युत । सुदर्शन महाज्वाल
छिंधि छिंध्याशु वेदनाम् ।।१६१।। सुदर्शन महाचक्र गोविंदस्य

वरायुध । सुदर्शन महावेग कोटिसूर्य समप्रभ ।।१६२।। त्रैलोक्य-रक्षाकर्ता त्वं दुष्टदानव-मर्दन । तीक्ष्णधार महावेग छिंधि छिंधि महाज्वरम् ।।१६३।। छिंधि छिंधि महाव्याधिं छिंधि छिंधि महाज्वरम् । छिंधि वातं च लूतां च छिंधि घोरं महद्विषम् ।।१६४।। रुजं दाहं च शूलं च निमिषज्वाल-गर्दभम् । सुदर्शनस्य मंत्रेण ग्रहा यान्तु दिशो दश ।।१६५।। ॐ नमो भगवते भो भो सुदर्शन दुष्टं दारय दारय । दुरितं हन हन । पापं मथ मथ । आरोग्यं कुरु कुरु । हां हां हुं हुं फट् ठः ठः हन नो द्विषः । त्रैलोक्यरक्षाकर्ता त्वम् आज्ञापय जनार्दन । ॐ नमो भगवते भो भो सुदर्शन चक्रायुधाय । महाशस्त्रास्त्रराजाय भूतेभ्यो भयं नाशय नाशय । छिंधि छिंधि परमंत्रान् परयंत्रान् परतंत्रान् जारणमारणादि छेदय छेदय । हुं फट् स्वाहा । ॐ नमो भगवते गरुडध्वजाय एह्येहि सर्व-ज्वर-भयं चक्रेण छिंधि छिंधि । भिंधि भिंधि मुद्गर-शंखचक्रगदापद्म-खड्गैः सर्व-ज्वरभयं हर हर, नाशय नाशय माम् आमरणम् अचिरेण रक्ष । रक्षाकर्ता त्वं आज्ञापय जनार्दन हुं फट् स्वाहा । ॐ त्रौं हौं सुदर्शन महायंत्रराज धगधगनितांत-भयंकरान् छिंधि छिंधि विदारय विदारय परमंत्रान् परतंत्रान् अभिचारान् ग्रासय परमंत्राणि दुष्ट-चेटककरण-मारी-महामारी-ग्रह-वेताल-पिशाच-भूतप्रेतादीन् भक्षय भक्षय । सर्वभूतानि त्रासय त्रासय स्वाहा । ॐ अचक्राय विचक्राय सुचक्राय असुरांतक, चक्राय सर्वलोकरक्षणाय चक्राय, सुदर्शनायास्त्रराजाय हुं फट् स्वाहा । इति सुदर्शन-विद्या । सर्व-दुष्टानि रक्षांसि क्षयं यान्तु बिभीषया । प्राच्यां रक्ष प्रतीच्यां च दक्षिणोत्तरयोस्तथा ।।१६६।। ईशान्ये च

तथाग्नेय्यां नैर्ऋत्यां च महादिशम् । वायव्यां सर्वभूतेभ्यः सदा रक्षां करोत्वसौ ।।१६७।। रक्षां करोतु सर्वत्र श्रीनृसिंहः स्वगर्जितैः। भुवि दिव्यंतरिक्षे च पार्श्वतः पृष्ठतोऽग्रतः ।।१६८।। व्याघ्रसिंहवराहेषु अग्निचोर भयेषु च । रक्षां करोतु भगवान् बहुरूपी जनार्दनः ।।१६९।। यथा विष्णुर्जगत्सर्वं सदेवासुर-मानुषम् । तेन सत्येन सकलं दुष्टमस्य प्रशाम्यतु ।।१७०।। यथा विष्णौ स्मृते सद्यः क्षयं यातीह पातकम् । तेन सत्येन सकलं दुष्टमस्य प्रशाम्यतु ।।१७१।। यथा यज्ञेश्वरो विष्णुर्वेदांतेष्वपि गीयते । तेन सत्येन सकलं दुष्टमस्य प्रशाम्यतु ।।१७२।। परमात्मा यथा विष्णुर्वेदान्तेष्वपि गीयते । तेन सत्येन सकलं दुष्टमस्य प्रशाम्यतु ।।१७३।। यथा योगेश्वरो विष्णुर्वेदान्तेश्वपि गीयते । तेन सत्येन सकलं दुष्टमस्य प्रशाम्यतु ।।१७४।। शांतिरस्तु शुभं चास्तु प्रणश्यत्वसुखं च यत् । वासुदेव-शरीरोत्थैः कुशैः संमार्जितो मया ।।१७५।। अपामार्जन गोविंदो नर-नारायणः सदा । ममास्तु सर्वदुःखानां प्रशमो वचनाद् हरेः ।।१७६।। शांताः समस्त-रोगास्ते ग्रहाः सर्वे विषाणि च । भूतानि प्रशमं यान्तु संस्मृते मधुसूदने ।।१७७।। एतत्समस्तारोगेषु भूतग्रह-भयेषु च । अपामार्जनकं शस्त्रं विष्णोर्नामाभिमंत्रितम् ।।१७८।। यथा चक्रायुधं विष्णोर्यथा शूलं हरस्य च । यथा वज्रं सुरेंद्रस्य तथा विप्रकरे कुशाः ।।१७९।। एते कुशा विष्णुशरीर-संभवा जनार्दनाग्रे स्वयमेव चागताः । हतं मया दुष्टमशेषमस्य स्वस्थो भवत्वेष वचो यथा हरेः ।।१८०।। शान्तिरस्तु शिवं चास्तु दुष्टमस्य प्रशाम्यतु । यदस्य दुरितं किंचित् तत् क्षिप्तं लवणार्णवे ।।१८१।। स्वास्थमस्य सदैवास्तु हृषीकेशस्य

कीर्तनात् । यत एवागतं पापं तत्रैव प्रतिगच्छतु ।।१८२।। एतद्रोगादि-पीडासु जंतूनां हितकाम्यया । त्रिसन्ध्यं जपते यस्तु सर्व रोगैः प्रमुच्यते ।।१८३।। विष्णुभक्तेन कर्तव्यमपार्जनकं परम् । अनेन सर्वःदुखानि प्रशमं यान्त्यसंशयम् ।।१८४।। सर्वभूतहितार्थाय कुर्यात् तस्मात्सदैव हि । कुर्यात् तस्मात् सदैव हरये नम इति शक्तिबीजम् ।।१८५।। य इदं धारयेद्विद्वान् श्रद्धाभक्तिसमन्वितः । ग्रहास्तं नोपसर्पन्ति न रोगा नच राक्षसाः ।।१८६।। धन्यो यशस्वी शत्रुघ्नः स्तवोऽयं मुनिसत्तम । पठतां शृण्वतां चापि ददाति परमां गतिम् ।।१८७।। स्तोत्रराजमिदं नाम अपामार्जनकं हरेः । विष्णुभक्तेन कर्तव्यं ब्रह्महत्या विनाशनम् ।।१८८।। विष्णोः प्रीतिकरं स्तोत्रं यः पठेन्नियमेन तु । तस्य तुष्यति गोविंदो मनसा चिन्तितं लभेत् ।।१८९।। जन्मकोटि-कृतं पापं पठनादेव नश्यति । गोसहस्र-फलं तस्य परं पदमवाप्नुयात् ।। १९०।। दाल्भ्यो नाम महाभागः पुलस्त्यो ब्रह्मनंदनः । तयोः संवादसंभूतम् अपामार्जनकंपरम् ।।१९१।।

इति श्रीविष्णुधर्मोत्तरपुराणे दाल्भ्य-पुलस्त्य-संवादे अपामार्जनस्तोत्रं संपूर्णम् । श्रीकृष्णार्पणमस्तु ।।

